दूर्वा निशा ऋद्धिवचा प्रिया च
सा माषपर्णी शिमिरोचना त्वथ ।
त्रायन्तिका जीवनिका महाबला
मङ्गल्यकायामिति चन्द्रमाह्वयाः ॥ २ ॥
प्रियङ्गुच्छिन्ना त्रिवृता कणाह्वया
वन्दाकदूर्वा तुलसी च नीलिनी ।
दुर्गा खगः कस्तुरिकृष्णसारिवा
श्यामा महीन्दुः कथिता भिषग्वरैः ॥ ३ ॥

इत्येकादशार्थाः ।

इत्थं विचिन्त्य विनिवेशिततत्तदेका-
नेकार्थनाम-गण-संग्रह पूर्णमेनम् ।
वर्गं विचार्य्य भिषजा बहुभक्तिभाजा
ज्ञेया स्वयं प्रकरणानुगुणाः प्रयोगाः ॥ ४ ॥
एको यस्य मनस्विनामचतुरो यस्य द्वयोरश्विनो-
स्त्र्यच्चाश्चाचतुरो नृपश्चवदनो नाम्नाऽरिषष्ठां जयो ।
एकार्थादिरमुष्य नाम-रचना-चूडामणौ यस्त्रयो-
विंशोऽसौ समपूरि सार्द्धममुना ग्रन्थेन वर्गो महान् ॥ ५ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्य्यायवत्यभि-
धानचूडामणावेकार्थाद्यभिधानस्त्रयोविंशो वर्गः ।

सम्पूर्णोऽयं ग्रन्थः ।